प्रदीयतां सम्प्रति केवलं नः सौराज्यमेतत्प्रथमं प्रवीराः ।
तद्राह्यमार्यैस्तु विराटराज्यं तानाहुरेवं रिपवः शरण्यान् ॥ ७८ ॥
अतः परं किं ननु भूरि भाग्यं यत्प्रार्थयन्ते रिपवः स्वयं नः ।
इत्थं परामृश्य तथेति चोक्त्वा विराटदेशं प्रति ते प्रचेलुः ॥७९॥
तत्तीर्थमथ ते यत्र मर्दितो लवणासुरः ।
प्रापुर्मार्गवशाद्वीरा मेघंकरपुरान्तिके ॥ ८० ॥
प्रतापशाहः किल तत्र तीर्थे स्नानादिकर्माणि विधाय सम्यक् ।
भूदेवदारिद्र्यकरालदैत्यं दानायुधैर्मर्दयति स्म सद्यः ॥ ८१ ॥
महारथास्तेऽथ विराटदेशे बालापुरं प्राप्य मनोऽभिरामम् ।
पुरोपमेयेषु पटालयेषु पर्जन्यकालं गमयाम्बभूवुः ॥ ८२ ॥
तीर्थेषु निश्शेषितविप्रदैन्यः प्रतापशाहः शमितारिसैन्यः ।
श्रीशाहनारायणराजसिंहसन्दर्शनोत्कण्ठितमानसोऽभूत् ॥ ८३ ॥
गुरुं समालोकितुकाममेनं विज्ञाय नारायणशाहसूनुम् ।
अवोचतां शाहमुरादराजश्रीखानखानक्षितिपौ तदानीम् ॥८४॥
यावच्चतुर्मासनिवासकारी पितुः समीपे त्वमुदारवीर्य ।
पुनः समायाहि यदिल्लखानराज्यापहाराय शरन्मुहूर्त्ते ॥ ८५ ॥
इत्थं निगद्य स्फुटमेकदेशराज्यं प्रतिश्रुत्य च तौ नरेन्द्रौ ।
रत्नैः सुवर्णैर्वसनैस्तुरङ्गैर्नागैश्च सम्भावयतः स्म वीरम् ॥ ८६ ॥
परिपृच्छ्य ततः प्रतापशाहः प्रणयी शाहमुरादखानखानौ ।
शिखिशैलविराजिराजधानीं गमिकर्मीकुरुते स्म भूरिसैन्यः ॥८७॥
श्रीमद्बागुलमेदिनीश्वरकुलालङ्कारचूडामणिः
प्रत्यर्थिक्षितिपान्धकारतरणिर्भूदेवचिन्तामणिः ।
लक्ष्मीकीर्त्तिसरस्वतीसुजनतासङ्केतकेलीगृहं
सोऽयं विश्वहितप्रतापधरणीपालः सुखं जीवतु ॥ ८८ ॥
पान्थान्पृच्छत्युदन्वानिति तटविहरद्राजहंसारवैर्यं
सानन्दं क्षेमतः किं क्षितिमिह विजयी शास्ति शाहप्रतापः ।
एतन्नाराचधारादलितरिपुवधूदृक्पयःपूरभूरि-
स्फारीभूताम्बुधारी कलशभवमुनेर्निर्भयः संवसामि ॥ ८९ ॥



ततो मयूराचलराजधानीमासाद्य नारायणसार्वभौमम् ।
प्रतापशाहः सुतरामकार्षीदानन्दपीयूषतरङ्गिणीशम् ॥ ९० ॥
श्रीनारायणनृपतेर्जयन्ति पुत्राश्चत्वारः प्रथम इह प्रतापशाहः ।
तस्यान्वक् स हरिहरश्चतुर्भुजाख्यस्तत्पश्चात्तदवर(जस्तु)राज-
सिंहः ॥ ९१ ॥
लोकलोचनचकोरसुधांशोः श्रीप्रतापनृपतेरपि सूनुः ।
सार्वभौमभजनीयगुणानामास्पदं जयति भैरवसेनः ॥ ९२ ॥
नारायणमहाराजकीर्तिपान्थमृगीदृशोः ।
इति काऽपि गिरां भव्या भङ्गी विजयतेतराम् ॥ ९३ ॥
का त्वं कीर्त्तिः किमीया शिखिगिरिनृपतेः क्व प्रयास्यम्बुराशिं
किं कार्यं श्रीनिदेशः कथय कथमये तात सिन्धो जडात्मन् ।
गाम्भीर्यौदार्यधार्ष्ट्यप्रमुखगुणगणं मत्पतिं मानुकार्षीः
त्वत्क्रोधान्मत्सपत्नीसदनविबुधसान्मामसौ यत्करोति ॥ ९४ ॥
श्रीनारायणशाहपार्थिवकुलोत्तंसाय सर्वाशिषा-
मावासाय सहर्षमाशिषमहो कां नूनमाशास्महे ।
अस्मै पण्डितवृन्दकामनिधये चेदायुराशास्महे
तन्नामाशिष एव सन्ततनिजावासार्थमाशासते ॥ ९५ ॥
यावल्लक्ष्मीकटाक्षो विलसति ललितः कैटभारेर्मुखेन्दौ
यावद्ब्रह्माण्डदीपस्तपति दिनमणिः कौमुदी यावदिन्दौ ।
वीरश्रीशाहनारायणधरणिपतिश्रेणिहीरस्य ताव-
द्वंशो विश्वावतंसो जगति विजयतां मेदिनीपालनाय ॥ ९६ ॥
आसीत्कोऽपि महीमहेन्द्रमुकुटालङ्कारहीरावली-
तेजःपुञ्जनितान्तरञ्जितपदः श्रीकेशवाख्यो बुधः ।
विद्वन्मण्डलमण्डनं समभवत्तस्मादनन्ताभिध-
स्तत्पुत्रो जगदम्बिकाङ्घ्रिकमलद्वन्द्वार्चनाप्राप्तधीः ॥ ९७ ॥
राष्ट्रौढक्षितिपालवंशमुकुटालङ्कारचूडामणि-
श्रीनारायणशाहजीवनविधेः सत्कीर्त्तिमुक्तावलीम्

विद्वत्कुण्डलभूषणानि विशदश्लोकैरगुम्फद्गुण-
स्फारैः पण्डितमण्डलाम्बुजरविः श्रीरुद्रनामा कविः ॥ ९८ ॥

निस्सारीयति सारिका पिककुलं रङ्कीयति व्याकुलं
हंसाली परमाकुलीयति शुकीमालाऽपि मूकीयति ।
यामाकर्ण्य किलाधरीयतितरां सौधाधरी माधुरी
सेयं काऽपि सरस्वती रसवती रुद्रस्य विद्योतते ॥ ९९ ॥

शाके भोगिशशीषुभू ( १५१८ ) परिमिते संवत्सरे दुर्मुखे
मासे चाश्वयुजे सितप्रतिपदि स्थाने मयूराचले ।
श्रीमल्लक्ष्मणपण्डितोदितकथामाकर्ण्य रुद्रः कविः
श्रीनारायणशाहकीर्त्तिरसिकं काव्यं व्यधान्निर्मलम् ॥ १०० ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्कृतवैरिवीरविजयः सर्गस्तु विंशोऽगमत् ॥१०१॥

इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोज-मयूरगिरिकेसरिश्रीमहाराजाधिराजश्रीनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये प्रतिवीरविजयो नाम विंशतितमः सर्गः ॥

समाप्तम् ।

## An alphabetical index to the geographical names in the Râshtraudhavaṇsamahâkâvya.

## An alphabetical index to the proper names in the Râshtraudhavansamahâkâvya.

## Corrigenda.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १३ | ४ | अमहल्ल | अनहल्ल |
| १३ | २० | शिवार्घां | शिवार्चां |
| १९ | १६ | तद्दक्षिणं | तद्दक्षिणां |
| ४२ | १२ | सथालनेरे | स थालनेरे |
| ५१ | २३ | शोभि छत्रं | शोभिच्छत्रं |
| ५६ | २७ | अमुप्मिन् | अमुष्मिन् |
| ७६ | २२ | संधी | सङ्घी |
| ८९ | २८ | पतति छा | पतति च्छा |
| ९१ | १५ | सन्यस्तं | सन्न्यस्तं |
| ९४ | १३ | न वा जगाम | न वाऽऽजगाम |
| ९५ | १५ | सदृशः | सुदृशः |
| ,, | १६ | श्लथम् | श्लथः |
| १०८ | २६ | °मृगेन्द्र० | °मगेन्द्र० |
| १०९ | ८ | विघसं | विधसं |
| ११३ | ८ | देवतेभ्यो | दैवतेभ्यो |
| ११३ | १८ | अथाह्यदाख्यं | अथाह्वदाख्यं |

## Index.

| | | | |
|---|---|---|---|
| १ | ६ | अमहल्ल | अनहल्ल |
| १ | ४ | विराट | विंराट |
| १ | ८ | आह्वद | अह्लद |
| २ | ११ | सथालनेर | थालनेर |